

तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रमासपत्रिका

डिसेम्बर् २०२०, रू.५/-

विना वेङ्कटेशं ननाथो ननाथः
सदा वेङ्कटेशं स्मरामि स्मरामि।
हरे! वेङ्कटेश! प्रसीद प्रसीद
प्रियं वेङ्कटेश प्रयच्छ प्रयच्छ॥





तिरुमलतिरुपतिदेवस्थानम्

**भारत राष्ट्रपतिमहोदयेन**
**मान्य श्री रामानाथ कोविन्द**
**महाभागेन सतीसमेतं २४.११.२०२०**
**दिने तिरुमल श्रीवेङ्कटेश्वरस्वामिनः,**
**तिरुचानूरु श्रीपद्मावतीदेव्याश्च**
**सन्दर्शन दृश्यानि।**















## गीतामृतम्

काश्यश्च परमेश्वासः शिखण्डी च महारथः।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः।।

(भगवद्गीता १७/१)

हे राजन्! श्रीकृष्णः पाञ्चजन्यं शङ्खम्, अर्जुनः देवदत्तनामानम्, भयानककर्मकारी वृकोदरो भीमः पौण्ड्रनामानं शङ्खम् अपूरयन्। एवं कुन्तीसुतः धर्मराजः अनन्तविजयम्, सुघोषं नकुलः, मणिपुष्पकं सहदेवश्चापूरयन्। तथा धनुश्श्रेष्ठः काशिराजा, महारथी शिखण्डी, धृष्टद्युम्नः, विराटमहाराजा, अपराजयी सात्यकिश्च स्वस्वशङ्खानपूरयन्।

## सङ्कीर्तनम्



एकं शास्त्रं देवकीपुत्रगीतम्
एको देवो देवकीपुत्र एव।
एको मन्त्रस्तस्य नामानि यानि
कर्मस्वेकं तस्य देवस्य सेवा।।

लोके एकमेव शास्त्रम्। तच्च देवकीपुत्रेण श्रीकृष्णेन प्रोक्तं 'श्रीमद्भगवद्गीता'शास्त्रम्। एवं एक एव देवः। स च देवकीपुत्रः श्रीकृष्णः। तस्य कृष्णस्य यानि नामानि सन्ति तान्येव मन्त्ररूपाणि। तस्य सेवा कर्मसु प्रधानं कर्म भवति। एतदेव मानवस्य जन्मनि महद्भाग्यम् इति आर्याः वदन्ति।

# जीवनवेदः

साक्षात् श्रीकृष्णपरमात्मनः सकाशात् निसृता ज्ञानगङ्गा ''श्रीमद्भगवद्गीता'' इति लोके प्रसिद्धा। युद्धे पराङ्मुखम् अर्जुनं निमित्तीकृत्य उपदिष्टापि एषा सर्वेषां जीवनधारतया अत्यन्तोयोगिकाऽस्ति।

इयं गीता मानवस्य जीवनसरणिं नियन्त्रयती सती सत्यभूतं मार्गं दर्शयति। गीतायाः अवगमनेन मानवस्य दैनन्दिनजीवनसम्बद्धानाम् अनेकप्रश्नानां समाधानमुपलभ्यत इति कारणात् इदं ''गीतामृतम्'' इति व्यवह्रियते।

एषा गीता 'विषादयोग'नाम्ना प्रथमाध्यायेन समारब्धा 'मोक्षसंन्यासयोग'नामकेन परिसमाप्ता भवति। अनेन ज्ञायते यत्, अत्यन्तविषादेन दुःखेन स्वजीवनं प्रारब्धः मानवः मोक्षविषयेऽपि विरक्तः भवति। एषा एव जीवन्मुक्तिः इति कथ्यते। सकलमानवानां दैवत्वप्रापिका आध्यात्मिकग्रन्थरूपा एषा श्रीमद्भगवद्गीता। स्वाश्रमविहितधर्मानुष्ठानपूर्वकं भगवदर्चनेन मनसः निर्मालिन्यं सिद्ध्यति। निर्मलमनसा मानवस्य फलापेक्षाशून्यः कर्मयोगः सिद्ध्यति। तेन ज्ञानभक्त्यादयः, तद्वारा मोक्षो लभ्यत इति गीतासारांशः। निष्कामकर्म एव आराधनम् इति गीताहृदयम्। विना ईश्वरार्पणबुद्ध्या क्रियमाणानि कर्माणि बन्धकारकाणि इति मत्वा ईश्वराधीनताज्ञानमेव मोक्षकारणमिति गीतायां बोधितम्। पाञ्चभौतिकेन स्थित्वा निर्विकारतया कथं जीवनं करणीयमिति बोधिका गीता एव। ''कर्मण्येवाधिकारस्ते मा फलेषु कदाचन'' इत्युक्तप्रकारेण निष्कामकर्म एव भगवतः प्रीतिकरमिति प्रतिपादितं गीतायाम्।

आधुनिकजीवने विषादमनुभूयमानानां जीवानां इन्द्रियनिग्रह-मनोनिग्रह-बुद्धिविषयेषु यथार्थज्ञानदानेन मानसिकप्रशान्ततामुत्पादयति। जगति प्रस्थानत्रयमिति ख्यातेषु सूत्रप्रस्थानं तथा उपनिषत् प्रस्थानं सार्वजनिकं न भवति, किन्तु इयं गीता सर्वेषां कल्पवृक्षसदृशी अस्ति।

आधुनिकदिनेषु मानवजीवनं यान्त्रिकं जातम्। सर्वेष्वपि निराशादुःखादयः अत्यन्तं स्पष्टतया प्रतिभान्ति। तादृशानां नूतनोत्तेजिका इव व्यवहृता भवति इयं गीता। तस्मात् गीतायाः श्रवणादिकं कार्यम्। रागद्वेषादिद्वन्द्वमार्गे गमनमेव बन्धः, तद्विपरीततया दैवमार्गे गमनमेव मोक्षः। एतदेव गीतारहस्यम्, उपनिषदां सारश्च। अतः सर्वैः पेयमेव इदं गीतामृतम्।



*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः


गौरवसम्पादकः-
डा.के.एस्.जवहर् रेड्डि I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
आचार्य के.राजगोपालन्, Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.


**सूचना**
मुद्रितलेखानां विचाराः लेखकानामेव ।
एतद्विषये अस्माकं दायित्वं नास्ति।
— *प्रधानसम्पादकः*


तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०७ सञ्चिका-०९


# डिसेम्बर् २०२०

श्रीशर्वरिनामसंवत्सरस्य कार्तिककृष्णप्रथमातः - मार्गशिरकृष्णप्रथमापर्यन्तम् - १९४१



मुखचित्रम् - श्रीशङ्खचक्राङ्कितः श्रीनिवासः, तिरुमल
अन्तिमरक्षापुटः - गोदादेवीसहितो गोविन्दः

## सङ्केतः


प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९, २२६४३६०
सूचनानाम्, आक्षेपाणां च कृते सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org


एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-



# धन्वन्तरिमहिमा

- डा.तोताद्रिनाथन्

चरवाणी - ९१७६६९००६५



श्रियःपतिः आर्तपरित्राणः शरणागतानां रक्षणे दृढसंकल्पयुक्तः। "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदाऽत्मानं सृजाम्यहम्" इति लोकगुरोः श्रीकृष्णस्य वचनम्। तदनुसृत्य शरणागतानां रक्षणार्थं प्रसिद्धमत्स्यादिबहुकृतावतारस्य भगवतः श्रीमहाविष्णोः श्रुतहंसाद्यवतारेषु श्रीधन्वन्तर्यवतारोऽपि एकतमः। स्वभावतः कारुणिकः भगवान् सुराणां रक्षणव्यापारमुखेन भूसुराणामपि परित्राणं करोति 'कमप्याद्यं गुरुं वन्दे कमलागृहमेधिनम्। प्रवक्ता छन्दसां वक्ता पञ्चरात्रस्य यः' इत्युक्तदिशा स्वकृतश्रीपाद्मादिपाञ्चरात्रसंहितासु एवं श्रीव्यासप्रणीतपुराणेषु च अस्य धन्वन्तरेः अवतारविषयः वर्णितोऽस्ति। अत्र धन्वन्तरेः महिमा द्विधा द्रष्टुं शक्यते १ रूपतः २ सन्देशतः इति।

१.स्वरूपतः भगवान् शरणागतानां रक्षणे जागरूकः इति स्थितिरूपाविर्भावेन प्रकटीकरोतीति।

२.शंखधारणम् आयुर्वेदोक्तशास्त्रार्थानां दिनचर्यादि नियमानां औषधज्ञानपरंपराप्रसारणपरं किञ्च आयुर्वेदस्य प्रयोजनं स्वस्थस्य स्वास्थ्यरक्षणं इत्यस्य बोधनपरं दृश्यते।

३. चक्रधारणं तावत् तत् आयुर्वेदज्ञानेन तीक्ष्णबुद्ध्या च आयुर्वेदलक्षणानुसारं सहिताहितं सुखं दुखं आयुस्तस्य हिताहितम्। "मानं च तच्च यत्रोक्तं आयुर्वेदः स उच्यते" अहितविषयाणां परित्यागः कर्तव्य इत्युपदेशरूपेण द्रष्टव्यः।

४. जलुका औषध-धारणं आयुर्वेदस्य अन्यप्रयोजनं आतुरस्य रोगप्रशमनम् इत्यस्य प्रदर्शनपरम्।

५. अमृतकलशेन आरोग्यं सम्यगस्ति चेत् मोक्षोपायानुष्ठानेन श्रुतिषु प्रसिद्धम् अमृतं प्राप्तुमर्हति इति विषयमपि सूचयति।

संदेशतः - "धर्मार्थकाममोक्षाणामारोग्यं साधनं यतः" इति सन्देशं व्याकर्तुं अस्य श्रीधन्वन्तरेरवतारकथया सूचयति -

यदा ब्रह्मादिदेवाः देवासुरयुद्धे कृतपरिश्रमाः, युद्धे सुराणां बलक्षयनिरसनार्थं श्रीमहाविष्णुं याचितवन्तः। तेषां स्तोत्रेण प्रीतः श्रीमहाविष्णु असुराणां सहायेन क्षीराब्धेः अमृतप्रापणाय मन्थनं कर्तव्यम् इति आज्ञां दत्तवान्। तदनुसारं मन्थराचलस्य मन्थकरूपेण वासुकिनामानं सर्पं मथनरज्जुं कृत्वा क्षीराब्देः मथनमारब्धम्। पर्वतस्यास्थिरत्वात् यः विघ्न अभवत् भगवतः कूर्मावतारेण दूरीकृतः। मथनेन वासुक्या उछ्वासनिश्वासेन हालाहलस्योद्भवेन भीताः देवासुराः महादेवप्रसादेन निर्भीताः सञ्जाताः। तदनन्तरं पुनः मथनेन उच्चैश्रवो नाम श्वेताश्वः, ऐरावतो नाम चतुर्दन्तयुक्तश्वेतगजविशेषः, कौस्तुभमणिः, पारिजातवृक्षः, महालक्ष्मीः, अप्सरसाः च निर्गताः। अन्ते श्रीमहाविष्णुः शङ्खचक्रादिदिव्यायुधयुक्तः हस्तद्वये तथा अन्यस्मिन् हस्तद्वये जलौकसा तथा अमृतकलशेन श्रीधन्वन्तर्यवतारं धृत्वा आविरभूत्।

अत्र अस्य अवतारस्य का महिमा, का सूचना प्राप्यते इति विचार्यते। अत्र अमृतं नाम स्वास्थ्यं आरोग्यम्। तदमृतं विना उच्चैःश्रवैरावताद्युपलक्षितवाहनादियोगः, कौस्तुभाख्यविवक्षितामूल्यवस्तुप्रापणयोगः, पारिजातवृक्षरूपयथेच्छाचिन्तनं वृत्तिः च महालक्ष्मीरूपधनधान्यप्राप्तिः एतेषां उपभोगः आरोग्यं विना न संभवति। अत एवोक्तं -

"धर्मार्थकाममोक्षाणारोग्यं साधनं यतः। तस्मात् आरोग्यदानेन तद् दत्तं स्याच्चतुष्टयम्"। अनेन ज्ञायते यत् श्रीमहाविष्णुः श्रीधन्वन्तर्यवताररूपेण सुराणां कृते अमृतं दत्वा भूसुराणां कृते इन्द्राश्विनीकुमारेभ्यः ऋषिभ्यः च आयुर्वेदज्ञानं प्रदाय आरोग्यसाधनं अनुगृहीतवान्। तदेव स्वयं श्रीधन्वन्तरिर्भगवान् उद्घोषयति यत् -

"अहं हि धन्वन्तरिरादिदेवो जरारुजोमृत्युहरोऽमराणाम्" इति।



# मार्गशिरमासवैभवम्

- एस्. श्रीरङ्गमाधवन्
चरवाणी - ९६८८७२६६३६



अस्माकं भारतम् अतिप्राचीनम्। अस्माकं संस्कृतिश्च अतिप्राचीना रमणीया च भवति। अस्माकं भारते वयम् एकैकस्मिन्नपि मासे विविधोत्सवादिकं कुर्मः। एवं प्रकारेण मार्गशीर्षमासे अपि विशेषतया भगवतः विष्णोः आराधनं चालयामः। अस्माकं भारतीयानां महत्वम् एवं भवति। अधुना अस्माभिः यत् यत् क्रियते तत् सर्वं स्वेच्छावहं किमपि नास्ति, अपि तु पौराणिकानां (महर्षि-मुनि-आचार्यप्रभृतीनां) गतेरेव अनुकरणं कुर्मः। अतः प्रायशः अस्माकं व्यवहारः (कार्यक्रमः) सर्वपूर्वजानाम् आचारमूलकः इति सुनिश्चितं भवति। उक्तप्रकारेण मार्गशीर्षमासव्रतस्यापि पौराणिकोल्लेखः अस्ति। पाद्मे पुराणे एवं स्कान्दे पुराणे च मार्गशिरमासमाहात्म्यं सुस्पष्टं दृश्यते। यथा पद्मपुराणे द्वितीयखण्डे दृश्यते। यथा स्कन्दपुराणे द्वितीयखण्डे (वैष्णवखण्डे) ब्रह्मविष्णुसंवादे। तत्र स्वयं चतुराननः परब्रह्मभूतं श्रीमहाविष्णुं पृच्छति। भवद्भिः ''स्वयं भगवन् मासेषु मासानां मार्गशीर्षोऽहम्'' इति उक्तम्। अतः भगवन् कृपया मां वदतु। तादृशं वैभवम् अस्मिन् मार्गशीर्षमासे किमस्ति? किं कर्तव्यम्? कः पूजनीयः? किं दानं कर्तव्यम्? यत् श्रोतव्यम्? यत् वेत्तव्यम्? इति। तदा भगवान् स्वयं वदति - पुरा गोकुले नन्दगोपो नाम राजा आसीत्। तस्मिन् गोकुले सहस्रशः गोपकन्यकाः मयिदत्तचित्ताः मद्रूपे लग्नमनाः मत्प्राप्तये मार्गशीर्षम् इदं व्रतं समाचरन्। ताः अस्मिन् मासे उषःकाले प्रातरुत्थाय यथाविधि स्नानं कृत्वा विशेषतः मां पत्रपुष्पफलैः हविष्यान्नमुद्गान्नाभ्याञ्च सम्पूज्य प्रीत्या भुक्ताः ताः अन्यान् च भोजयितवत्यः। ततः प्रसन्नः अहं ताभ्यः वरं दत्तवान्। एवं कृष्णावतारे तासां परिणयश्च कृतः मया। अतः इदञ्च मार्गशीर्षं अवश्यं कर्तव्यं नरैः। सर्वयज्ञेषु यत्पुण्यं, सर्वतीर्थेषु च यत्फलं तत् सर्वं अवाप्नोति मर्गशीर्षव्रतानुष्ठानेन। यज्ञेन वा अध्ययनेन वा दानेन वा संन्यासेन वा योगेन वा आहं न वश्यामि। स्नानेन दानेन पूजनेन च मार्गशीर्षे मासे अहं तस्य वशो भवामि। ये पुण्यकर्माणः मद्भक्ताः तैः अवश्यं कर्तव्यम् इदं मार्गशीर्षव्रतम्। यो नरः मार्गशीर्षं न समाचरेत् सः पापस्य वासस्थानं एव कलिकलुषविमोहित इति ज्ञेयः। तस्मात् नरैः अवश्यं कर्तव्यमिदं मार्गशीर्षाख्यव्रतम् इति भगवतः विष्णोः वचनं श्रुत्वा ब्रह्मदेवः धन्योऽहं भगवन् येन माहात्म्यश्रवणेन इति उक्तवान्। इति स्कान्दपुराणे मार्गशीर्षमाहात्म्यं वर्तते। एवमस्मिन् अपि कलियुगे द्राविडदेशे साक्षात् भूदेव्याः अवतारः गोदानाच्चियार् अस्मिन्नेव मासे मार्गशीर्षव्रतं कृत्वा साक्षात् श्रीमन्नारायणं श्रीरङ्गवासिनं परिणीतवती इति विश्वप्रसिद्धो विषयः। इदानीमपि तस्याः तिरुप्पावै इति द्राविडप्रबन्धस्य सर्वेषु च वैष्णवालयेषु अस्मिन् मासे विशेषतः पारायणं कुर्वन्ति। अतः भगवता स्वप्राप्तये स्वयमेव साधनतया उक्तम् इदं व्रतं आचर्य वयमपि सद्गतिं प्राप्नुम इति श्रीसप्तगिरीशं श्रीनिवासं प्रार्थये।





# श्रीनिवासस्य वैकुण्ठएकादशी महोत्सवः

- आचार्य वेदान्तं श्रीविष्णुभट्टाचार्यः
चरवाणी - ९८४९२६४६०७

अखिलाण्डकोटिब्रह्माण्डनायकस्य अखिलहेय प्रत्यानीककल्याणगुणाकरस्य तिरुमलक्षेत्रे विराजमानस्य श्रीश्रीवेङ्कटेश्वरस्वामिनः वैखानसागमशास्त्रोक्तरीत्या प्रचलिताः उत्सवाः नैकविधास्सन्ति। ते नित्य-वार-मास-नक्षत्र- संवत्सरेषु तत्तद्दिनेषु वैभवेन साम्प्रदायपद्धत्या अनुष्ठिता भवन्ति। तत्र तावत् -

सुप्रभातसेवा-पुष्पसमर्पण (तोमाल)-अर्चन-नैवेद्य-कल्याणोत्सव-वसन्तोत्सव-वाहनोत्सव-दर्पणोत्सव-दीपोत्सव-वीथ्युत्सवाः नित्योत्सवा भवन्ति।

विशेषपूजा-सुवर्णपुष्पपूजा-अन्नकूटोत्सव - सहस्रकलशाभिषेक-अभिषेकक्रियाः वारोत्सवाः भवन्ति।

पूर्णिमातिथौ गरुडवाहनसेवा, श्रीराम-श्रीकृष्ण-रामानुजाचार्याणां अर्चनानि मासोत्सवाः आद्यन्ते।

वसन्तोत्सव- पद्मावतीपरिणयोत्सव-ज्येष्ठाभिषेकोत्सव पवित्रोत्सव-ब्रह्मोत्सव-पुष्पयाग-अध्ययनोत्सव-वैकुण्ठ एकादशी उत्सव-रथसप्तमी उत्सव-प्लवोत्सवादयः संवत्सरोत्सवाः भवन्ति। एतेषु संवत्सरोत्सवेषु अत्यन्तं विशिष्टः मोक्षदायकः जन्मसाफल्यार्थं निर्णीतः उत्सवः वैकुण्ठ एकादशी उत्सवः एव। अयं वैकुण्ठएकादशी उत्सवः वैखानसागमशास्त्रसम्बद्ध पारम्पर्याचारसंयुक्तः धनुर्मासे शुक्लपक्षे एकादश्यां तिथौ समनुष्ठितः भवेत्।

कर्काटकमासात् धनुर्मासपर्यन्तं षण्मासाः ये सन्ति स च कालः दक्षिणायननाम्ना प्रसिद्धो वर्तते। मकरमासात् मिथुनमासपर्यन्तं निर्दिष्टः यः कालः अस्ति स च उत्तरायणनाम्ना प्रसिद्धो राराजति। तत्र ऋषीणां मुनीनां देवतानां योगिनां दिक्पालकानां ग्रहाणां सर्वेषां उत्तरायणकालः असौ सूर्योदयसूर्यस्तमयपर्यन्तदिवाकालः भवेत्। सूर्यास्तमयादारभ्य सूर्योदयपर्यन्तं रात्रिकालः स एव दक्षिणायनकालः इति प्रसिद्धः भवति।

तत्रापि विशेषस्तावत् धनुर्मासकालः देवतादीनां ब्राह्मीमुहूर्तकालः भवेत्। तस्मिन् ब्राह्मीमुहूर्तकाले ते शयनादुत्थाय आह्निकक्रियाः परिसमाप्य ध्यानतत्पराः भूत्वा



परमात्मानं श्रीमन्नारायणम् उत्तरदिङ्मुखात् समागत्य दृष्ट्वा प्रणम्य परमानन्दमनुभवन्ति। तान् दृष्ट्वा श्रीमन्नारायणः अनुगृह्णाति च। अयम् आर्षवाङ्मयोपदेशः। अमुमुपदेशं मनसि निधाय वयमपि देवताशक्तिं संसाधयितुं धनुर्मासदिनेषु ब्राह्मीमुहूर्तकाले परमात्मनं सम्यगभ्यर्च्य प्रणामान् कुर्मः।

''पूर्वपक्षे धनुर्मासे चैकादश्यां विशेषतः।
वेदानध्यापयेत् सम्यग्गानैर्नृत्तादिभिः सह।।''

यज्ञाधिकारः ४३,६८.

इति वैखानसभगवच्छास्त्रे भृगुमहर्षेः उपदेशमाधारीकृत्य साम्प्रदायपद्धत्या च तिरुमलक्षेत्रे विराजमानस्य सप्ताचलनिवासरसिकस्य पञ्चविधव्यूहात्मकस्य अर्चास्वरूपधारिणः श्रीश्रीनिवासस्य सन्दर्शनं वैकुण्ठ एकादशीपर्वदिने कृत्वा वैकुण्ठद्वारात् प्रदक्षिणं कृत्वा जन्मसाफल्यं प्राप्नुवन्तु इति प्रार्थयामहे।

**'स्वर्णरथोत्सवः'** - अस्मिन् पर्वदिने स्वर्णरथे विराजमानं श्री-भूसहितमलयप्पनामकं उत्सवे बिम्बं दृष्ट्वा धन्या अपि भवामः। स्वामिनः पादपद्म-पुष्पमाला-खड्ग-कटिहस्त-वरदहस्त-स्वर्णयज्ञोपवीत-नागाभरण-सालग्राममाला-लक्ष्मीमाला- श्रीवत्स-वक्षःस्थल-श्रीभूदेव्यौ-शङ्खचक्र-कर्णाभरण-कण्ठ-मुखसौन्दर्य-ऊर्ध्वपुण्ड्र-किरीट-किरीटमाला-तोराणादिना सहितम् अचिन्त्यदिव्याद्भुतनित्ययौवन-स्वभावलावण्यातिशयसौन्दर्यं समासाद्य देवताशक्तिं संप्राप्य धन्याः पुनीताः पावनाः धर्मकर्माणः भवामः इत्याशास्महे।

श्रीश्रीनिवासः परमा गतिर्नः



## 'सप्तगिरि' ग्राहकेभ्यः सूचनाः

**सप्तगिरि-मासपत्रिकायाः पाठकेभ्यः प्रतिमासं सकाले प्रापणार्थं नानाविधकार्यान् करोतीति अवगतः विषयः एव। अस्मिन्नेव क्रमे भक्तानां सङ्केतानां क्रमीकरणार्थं प्रयत्नं करोति। पाठकाः एनं विषयं दृष्टौ स्थाप्य अधोनिर्दिष्ट प्रकारेण प्रधानसम्पादकस्य कार्यालयं प्रति सम्पर्कं कुर्वन्तु।**

१.सप्तगिरि मासपत्रिकायाः सम्बन्धिताः सूचनाः, आक्षेपान् च sapthagiri.helpdesk@tirumala.org द्वारा सूचयितुं शक्नुवन्ति।

२. सप्तगिरि ग्राहकाः सङ्केतस्य परिवर्तन-सम्बन्धी विवराणां कृते ०८७७-२२६४५४३ दूरवाणीं प्रति स्वीय सम्पूर्णं सङ्केतं, दूरभाषा संख्यया साकं कार्यालयस्य कार्यसमये (प्रातः १०.३० तः सायं ५.०० मध्ये) पुनः ज्ञापयन्तु।

३. उपर्युक्त दूरवाणी संख्या द्वारा अथवा sapthagiri.helpdesk@tirumala.org द्वारा वा सूचयन्तु।

४. अन्तर्जाल (आन्लैन्) ग्राहकाः स्वीय सम्पूर्णं सङ्केतं ति.ति.दे. अन्तर्जालपुटे ज्ञापयन्तु!



# श्रीस्वामिपुष्करिणीतीर्थमुक्कोटि

- डा.एन्.तनुज् विष्णुवर्धन्



**वल्मीकं देवकी साक्षात् वसुदेवोऽथ तिन्त्रिणी।**
**बलभद्रश्शेषशैलो मधुराऽभूदधित्यका॥**
**स्वामिपुष्करिणी तत्र यमुना च व्यराजते।**

वेदवेदान्तवेद्यस्य श्रीमहाविष्णोः परव्यूह-विभव-अन्तर्यामि-अर्चावताररूपेषु अत्यन्तसुलभः अर्चावतार एव। तेष्वर्चावतारेषु श्रीवेङ्कटेशः "विना वेङ्कटेशं न नाथो न नाथः" इति, 'वेङ्कटेशसमो देवो न भूतो न भविष्यति' च यथा सर्वोत्तम इति कीर्त्यते, तद्वत् गङ्गादिसकलपवित्रपुण्यतीर्थेषु वेङ्कटाचलस्य श्रीस्वामिपुष्करिणी अपि कीर्त्यते। यथा च द्वापरे युगे श्रीकृष्णावतारसमये या नदी श्रीकृष्णदर्शनार्थमागतानां गोपिकागणभक्तजनानां कृते यमभयत्राता स्यात्, सा एव पुण्यनदी इदानीं शेषाद्रौ स्वामिपुष्करिणीरूपेण विराजते।

**"स्वामिपुष्करिणीशब्दार्थः"** - तत्र पुष्कमित्यस्य पुष्कं पवित्रमुदकं अस्तीति पुष्करमिति व्युत्पत्या सकलानां गङ्गादिपुण्यजलानां कारणभूतं इत्यर्थः। तादृशपुण्यपुष्कराख्यजलयोगात् पुष्करिणी इति रूढ्यर्थः। कीर्त्यते च -

**सरांसि यानि दिव्यानि सन्ति त्रिजगतीतले।**
**तेषामेषा स्वामिनी हि 'स्वामिपुष्करिणी'त्यतः॥ इति।**

स्वामिनः श्रीवेङ्कटेशस्य पुष्करिणी स्वामिपुष्करिणी इति सामान्यतः वयं सर्वे भावयामः। किन्तु त्रिषु जगत्सु यानि दिव्यानि पुण्यसरांसि भवन्ति तेषां सर्वेषां स्वामिनी भवति श्रीवेङ्कटाद्रिस्था इयं पुष्करिणी। अत एव अस्याः नाम स्वामिपुष्करिणीति वामदेवमहर्षिणा समभिहितम्।

**श्रीस्वामिपुष्करिणीस्नानफलम् -**

**यः स्नायाद्वारिणि स्वामिपुष्करिण्याः स्मरन् हरिम्**
**सप्तजन्मकृतं पापं सहसा स व्यापोहति।**

स्वामिपुष्करिण्याः वारिणि यः भक्त्या हरिं स्मरन् स्नायात्, तस्य भक्तस्य सप्तजन्मकृतं पापं नश्यतीति वशिष्ठमहर्षिणामुपदेशः।

**यः करोत्याप्लवं स्वामिसरसीजलमध्यतः।**
**सोऽतीत्य निरयं सर्वं ब्रह्माभूयाय कल्पते॥**

स्वामिपुष्करिणीजलस्नानं यः करोति, सः शीघ्रं संसारसागरं तीर्त्वा श्रीवैकुण्ठसायुज्यमवाप्नोतीति सकलमहर्षिणामुपदेशसारः।

**श्रीस्वामिपुष्करिणीतीर्थमुक्कोटिवैशिष्ठ्यम् -** स्वामिपुष्करिण्यां विशेषेण कन्यामासे श्रवणानक्षत्रे एवं धनुर्मासशुध्दद्वादश्यां, रथसप्तमीपर्वदिने च विशेषचक्रस्नानं समाचरन्ति। अस्मिन् समये ये जनाः पुष्करिणीस्नानमाचरन्ति ते अत्युत्तमपुण्यफलं प्राप्नुवन्ति। तत्र धनुर्मासशुध्दद्वादश्यां क्रियमाणस्यावभृथस्य श्रीस्वामिपुष्करिणीतीर्थमुक्कोटि इति उच्यते। तस्मिन् दिने सर्वाणि पुण्यतीर्थानि स्वामिपुष्करिणीजलमायान्तीति तस्मिन् दिने अरुणोदयवेलायां भक्त्या पुष्करिणीस्नानं ये आचरन्ति ते सद्यः मुक्ता भवन्तीति श्रीवेङ्कटाचलमाहात्म्ये एवमुपदिष्टं वर्तते -

**धनुर्मासे सिते पक्षे द्वादश्यामरुणोदये।**
**आयान्ति सर्वतीर्थानि स्वामिपुष्करिणीजले॥**
**तत्र स्नात्वा नरः सद्यो मुक्तिमेति न संशयः।**
**यस्य जन्मसहस्रेषु पुण्यमेवार्जितं पुरा॥** इति।

अत एवास्मिन् दिने श्रीमहाविष्णोरनपायिनं श्रीमत्सुदर्शनस्वामिनं (चक्रत्ताळवार्) मङ्गलवाद्यवेद-घोषपुरस्सरमालयप्रदक्षिणं कारयित्वा वराहस्वामिनो दिव्यालयप्राङ्गणे अभिषेकं कृत्वा अनन्तरं स्वामिपुष्करिण्यां सुदर्शनभगवता सह आचार्यार्चकवेदपारगभक्तजनास्सर्वे स्नानमाचरन्ति। अनेन पुण्यस्नानेन सकलपापविमुक्तिः श्रीवैकुण्ठप्राप्तिरूपमुक्तिश्च प्राप्यते इति श्रुतिस्मृतिगुरूक्तिभिः ज्ञायते। एतस्मिन् दिने पुष्करिणीस्नानभाग्यं सहस्रपूर्वजन्मसु समार्जितपुण्यफलेनैव लभ्यत इत्युपदिदिशुर्महर्षयः। उच्यते च -

**स्वामिपुष्करिणीतोये स्नानपानादिकर्म ये।**
**कुर्वन्ति पापस्तम्भं ते परित्यज्याप्नुवन्ति सत्।**

इति।





**दिनाङ्कः ११-११-२०२० प्रभृति**
**१९-११-२०२० पर्यन्तं प्रवर्तितस्य**
**तिरुचानूरु**
**श्री पद्मावतीदेव्याः**
**कार्तिकब्रह्मोत्सवस्य**
**दृश्यमालिका।**













## तिरुमलतिरुपतिदेवस्थानम्

**दिनाङ्कः ११-११-२०२० प्रभृति**
**१९-११-२०२० पर्यन्तं प्रवर्तितस्य**
**तिरुचानूरु**
**श्री पद्मावतीदेव्याः**
**कार्तिकब्रह्मोत्सवस्य**
**दृश्यमालिका।**



















## तिरुचानूरु श्रीपद्मावतीदेव्याश्च प्रवर्तितयोः पुष्पयागमहोत्सवयोः दृश्यानि।



तिरुचानूरु श्रीपद्मावतीदेव्याः वार्षिक कार्तिकब्रह्मोत्सवेषु
आन्ध्रप्रदेश प्रभुत्वपक्षे उपमुख्यमन्त्रिवर्येण
गौ.श्रीनारायणस्वामि महोदयेन दुकूलानि समर्पितानि।



तिरुमल श्रीवेङ्कटेश्वरालये
कार्तिकदीपोत्सवः



# भगवद्गीतायाः माहात्म्यम्

- कु.के.श्रावणी रेड्डि,
चरवाणी - ७०३६२३५२४९

**कृष्णं कमलपत्राक्षं पुण्यश्रवणकीर्तनम्।**
**वासुदेवं जगद्योनिं नौमि नारायणं हरिम्।।**

इयं भगवद्गीता भगवता श्रीकृष्णेन स्वयं अर्जुनाय प्रदत्ता। इयं भगवद्गीता वेदत्रयस्य स्वरूपा इत्युक्ते त्रयाणां वेदानां सारः इत्यर्थः। तां ये आश्रयन्ति तेषां कृते शीघ्रं तत्वज्ञानं बोधयति। इदमेव भवति गीतायाः प्रप्रथममाहात्म्यम्।

द्वितीयं यत् गीतामाहात्म्यविषये यदि वयं आलोकनं कुर्मः सम्पूर्णभगवद्गीता भगवता श्रीकृष्णेन एव प्रोक्ता किन्तु कुत्रापि 'श्रीकृष्ण उवाच' इति न दृश्यते। किमर्थं इत्युक्ते भगवान् एकः एव इति भावना तत्र दरीदृश्यते इति कारणात् 'श्री भगवानुवाच' इति सम्पूर्णभगवद्गीतायां व्याप्तं अस्ति। एतदपि एकम् माहात्म्यम् भवति।

यदि वयं प्रकृतं अनुसरामः, अस्माकं लोके बहवः ग्रन्थाः प्रसिद्धाः भवन्ति। किमर्थमिति चेत् अत्र कारणद्वयं अथवा माहात्म्यद्वयं विद्यते। प्रथमं भवति वक्तुः माहात्म्यम्। द्वितीयं प्रतिपाद्यमाहात्म्यम्। वक्तृमाहात्म्यम् इत्युक्ते लोके कश्चन प्रसिद्धः वक्ता अस्ति चेत् तस्य ग्रन्थः यदि असमीचीनः भवति चेदपि तस्य ग्रन्थस्य प्रचुरता सततं स्यन्दमाना एव भवति। प्रतिपाद्यमाहात्म्यमित्युक्ते यदि कश्चन अपरिचितः वा अप्रसिद्धः वा भवतु तस्य विषयस्य प्रतिपादनव्याजेन तस्य ग्रन्थस्य महती कीर्तिः लोके परिव्याप्ता भवति। यदि अत्र गीतायां पश्यामः, वक्ता उत्तमः प्रतिपाद्यविषयः अपि उत्तमः। प्रायशः एतादृशं माहात्म्यं अन्यग्रन्थेषु न उपलभ्यते। इदमेव भवति गीतायाः महद्वैभवम्। अस्मिन् ग्रन्थे - योगविषयाः, कर्माचरणविषयाः, ज्ञानविषयाः, आत्मविषयाः, भक्तिविषयाः, त्रिगुणानां विषयाः एवं रूपेण अस्माकं प्रपञ्चे वस्तुतः यानि यानि कर्माणि मनुष्याः आचरन्ति, तान् कर्मभिः अन्वयं कर्तुं

शक्यते। एतादृशग्रन्थस्य माहात्म्यं बहुषु पुराणेषु तथैव बहवः विद्वांसः स्वकीयग्रन्थेषु प्रतिपादितवन्तः किन्तु तत्रापि वराहपुराणे वर्णितं गीतामाहात्म्यं अन्यतमं भवति। तत्र स्थालीपुलाकन्यायेन पश्यामः चेत् आदौ भगवन्तं विष्णुं एव प्रप्रच्छ।

**भगवन् परमेशान! भक्तिरव्यभिचारिणी।**
**प्रारब्धं भुज्यमानस्य कथं भवति हे प्रभो।।**

अर्थात् यः कोपि मनुष्यः प्रारब्धकर्मवशात् बाधां अनुभवन् अस्ति चेत् तस्मात् कथं आगन्तुं शक्नोति? इति धरः पृष्टवान्। अनन्तरं विष्णुना एवं उक्तम् -

**''प्रारब्धं भुज्यमानोऽपि गीताभ्यासरतः सदा।**
**स मुक्तः ससुखी लोके कर्माणा नोपलिप्यते।।''**

इत्युक्ते भगवान् विष्णुः कथयति, यः कोऽपि मनुष्यः कर्मवशात् बाधां अनुभवन् अस्ति चेत् अपि सदा गीताभ्यासः तेन क्रियते चेत् लोके सः सुखी भवति। कर्माणि अपि तम् न स्पृशन्ति।

महापातकादिपापानि अपि गीताध्ययनेन नलिनीदलस्थितं अम्भः इव क्वचिदपि स्पर्शं न कुर्वन्ति। तथैव

**''गातीयाः पुस्तकं यत्र यत्र पाठः प्रवर्तते।**
**तत्र सर्वाणि तीर्थानि प्रयागादीनि तत्र वै।।''**

अर्थात् यत्र गीता पुस्तकं, यत्र गीतायाः पाठः प्रवर्तते तत्र प्रयागादीनि पुण्यतीर्थानि तत्रैव विद्यन्ते। अनन्तरं भगवता आनन्देन उक्तम् एतद् वाक्यं यत् यत्र गीतायाः विचारः तथैव पठनं पाठनम् अपि चलति तस्यां भूमौ अहं निश्चयेन वसामि इति। इयं गीता चिदानन्देन कृष्णेन स्वमुखतः अर्जुनं प्रोक्ता। अतः एतादृशीं गीतां

**''यो अष्टादश जपेन्नित्यं नरो निश्चलमानसः।**
**ज्ञानसिद्धिं स लभते ततो याति परं पदम्।।''**

यः प्रतिदिनम् अष्टादशाध्यायान् निश्चलमनसा पारायणं करोति सः ज्ञानशक्तिं प्राप्य परमपदं गच्छति। यः कोऽपि प्रतिदिनम् अष्टादशाध्यायानां पारायणं कर्तुं न शक्नोति भक्त्या एकाध्यायपठनेनापि सः रुद्रलोकमवाप्य चिरकालं यावत् सुखेन तिष्ठति। यदि एकाध्यायमपि पठितुम् न शक्नोति दशश्लोकान् वा सप्तश्लोकान् वा पञ्चश्लोकान् वा श्लोकचतुष्टयं वा श्लोकद्वयं वा एकं श्लोकं वा नो चेत् श्लोकानां अर्थं वा पठति चेत् चन्द्रलोकं अवाप्य शाश्वतम् आनन्दम् अनुभूय तत्रैव निवसति।

ये केऽपि पठितुम् इच्छां मा प्रदर्शयन्ति ते महापापिनः वा भवन्तु गीताश्रवणेन वैकुण्ठम् अवाप्य विष्णुना सह आनन्दम् अनुभवन्ति। एतदृशीं गीतां पठति चेत् यावत्पर्यन्तं भूमौ जीवति तावत्पर्यन्तं विना कष्टेन विना दैन्येन जीवनमनुभोक्तुं शक्नोति। अवसाने भगवता एवम् उक्तम्

**गीतामाश्रित्य बहवो भूभुजो जनकादयः**
**निर्धूतकल्मषा लोके गतास्ते परमं पदम्।।**

नाम एनां गीतां महाराजजनकादयः अपि पठित्वा परमं पदं प्राप्तवन्तः इति अस्मात् श्लोकात् ज्ञायते। गीतायाः पठनं कृत्वा माहात्म्यं न पठति चेत् तस्य पाठः तथैव श्रमा वृथा भवति। अस्मात् गीतायाः पठनानन्तरम् वयं अपि गीतामाहात्म्यं पठित्वा परमात्मपदं प्राप्तुं प्रयत्नं कुर्मः।

**''मङ्गलं यादवेन्द्राय बृन्दावनविहारिणे।**
**रुक्मिणीप्राणनाथाय वासुदेवाय मङ्गलम्।।''**






# अन्नमाचार्यजीवनचरित्रम्

तेलुगु मूलम् - डा.मन्नूरु शिवप्रवीण्, संस्कृतानुवादः- एम्.नागमाधुरी कामेश्वरी, **चरवाणी - ९४४०८४८८५८**

### अन्नमाचार्यः पुरन्दरदासः -

यथा अन्नामाचार्यस्य श्रीवेङ्कटेश्वरः तथैव पाण्डुरङ्गविट्ठलः पुरन्दरस्य उपास्यदेवः। पुरन्दरदासः व्यासरायाणां शिष्यः। हरिदाससम्प्रदायावलम्बकः। कन्नड भाषायां विट्ठलमुद्रया प्रायः पञ्चलक्षसङ्कीर्तनानि पुरन्दरेण लिखितानि इति वदन्ति। तादृशः पुरन्दरदासः अन्नमाचार्यस्य गानप्राशस्त्यं, सङ्कीर्तनवैभवञ्च ज्ञातवान्। अन्नमाचार्यस्य सङ्कीर्तनप्रभावं श्रुत्वा अन्नमाचार्यः श्रीहरेः अंशजः इति मत्वा तं द्रष्टुमीप्सितः। तिरुमलमागत्य भगवन्तं तस्य भक्तञ्च दृष्टवान्। अन्नमाचार्योऽपि पुरन्दरदासं साक्षात् पाण्डुरङ्गविट्ठल इव भावितवान्।

### अन्नमाचार्यरचनाः -

अन्नमाचार्यः द्वात्रिंशत्सहस्रकानि सङ्कीर्तनानि विरच्य श्रीवेङ्कटेशपादाङ्कितमकरोत्। तेषु कानिचन योगमार्गसम्बद्धानि। कानिचन श्रृङ्गारस्फोरकाणि। कानिचन वैराग्यदायकानि सङ्कीर्तनानि। एतैः सङ्कीर्तनैः सह द्विपदप्रबन्धमाध्यमेन रामायणम्, वेङ्कटाचलमाहात्म्यम् इति संस्कृतकाव्ययुगलं, श्रृङ्गारमञ्जर्या सह द्वादश (१२) शतकानि विरचिवान्. द्वादशस्ववपि शतकेषु केवलं वेङ्कटेश्वरशतकमेव लभ्यते।

### ताळ्ळपाक तिम्मक्का : -

अन्नमाचार्यस्य ज्येष्ठभार्या ताळ्ळपाक तिरुमलाम्बा। तिरुमलम्मा, तिरुमलक्का, तिम्मक्का इति तिरुमलाम्बायाः नामान्तराणि। तेलुगु भाषायाम् ताळ्ळपाक तिम्मक्का



आदिकवयित्री। अनया लिखितः ग्रन्थः सुभद्राकल्याणम्। ११६३ पदैः विरचितं द्विपदकाव्यं भवति सुभद्राकल्याणम्। सुभद्राकल्याणकाव्यस्य आधारग्रन्थो भवति महाभारतम्। सुमधुरैः तेलुगुपदैः काव्यमिदं विरचितम्। महाभारते मूले अविद्यमानं तिरुमलसन्दर्शनम् अर्जुनेन कारितवती। तथा श्रीवेङ्कटेश्वरस्योपरि विद्यमानां तस्याः प्रगाढभक्तिं प्रकटितवती। सुभद्रापात्ररचनायां तस्याः तिम्मक्कायाः कविताकौशलं, नैपुण्यं तस्यानन्तरकवयः चेमकूर वेङ्कटकविवर्यादयः अनुसृतवन्तः।

**अन्नमाचार्यसन्ततिः -**

स्वसङ्कीर्तनैः श्रीवेङ्कटेश्वरमर्चितः अन्नमाचार्यः श्रीनिवासाशीर्वादेन स्वसमानौ पुत्रौ प्राप्तवान्। तौ नरसय्याचार्य तिरुमालाचार्यौ। एतौ द्वौ भक्त्यां साहित्यसृजनप्रक्रियायाञ्च अन्नमाचार्यतुल्यौ एव। पेद्दतिरुमलय्य इति प्रसिद्धः तिरुमलाचार्यः पितुः अन्नमाचार्यस्य आज्ञानुसारं प्रतिदिनं सङ्कीर्तनं विलिख्य श्रीनिवासमर्पयन्नासीत् इति प्रतीतिः। श्रृङ्गाराध्यात्मसङ्कीर्तनानि, वेङ्कटेश्वरवचनानि, श्रृङ्गारदण्डकम्, चक्रवाळमञ्जरी, वेङ्कटेश्वरोदाहरणम्, नीतिसीसशतकम्, श्रीवेङ्कटेश्वरप्रभातस्तवमित्यादीन् ग्रन्थान् विरच्य स्वामिनः सेवायां कृतकृत्यः जातः। एतैः तिरुमलवेङ्कटेश्वरस्य विशिष्टाः सेवाः आचरिताः इति शासनाधारैः ज्ञायते। चिन्नतिरुमलय्य, पेद्दतिरुवेङ्गलनाथः, तिरुवेङ्गलनाथः (चिन्नन्न), कोनेटितिरुवेङ्गलनाथस्य तिरुमलाचार्यस्य पुत्राः। तिरुमलाचार्यस्य पुत्राः अपि पितामहस्य अन्नमाचार्यस्य, पितुः तिरुमलाचार्यस्य मार्गे एव तिरुमलवेङ्कटनाथस्य साहितीसेवां कृतवन्तः। अन्नमाचार्यस्य प्रपौत्रः चिन्नतिरुलय्यपुत्रः तिरुवेङ्गळप्प, अन्नमाचार्यस्य पुत्र्याः तिरुमलाम्बायाः पुत्रः रेवणूरि वेङ्कटाचार्याः अपि पितामह प्रप्रितामहाः इव श्रीवेङ्कटेश्वरकृपालब्ध्यै सङ्गीतसाहित्यपदार्चनादिभिः स्वामिनः सेवायां कृतकृत्याः सञ्जाताः।

यथा लघुबीजः महावृक्षो भवति तथैव अन्नमाचार्यादारब्धं श्रीनिवाससाहित्यपदार्चनं, सङ्कीर्तनयज्ञः प्रायः अन्नमाचार्यानन्तरं पञ्चतरान्यावत् अनुवर्तितम्। एतेषां साहित्यसेवया श्रीनिवासः आनन्दडोलायामानन्दितः। तादृशं धन्यत्वं प्राप्य न केवलं ताळ्ळपाकवंशं सम्पूर्णं प्रपञ्चमपि धन्यं कृतवन्तः ताळ्ळपाककवयः।

एतादृश सङ्कीर्तनविराड्रूपस्य मूलकारकः अन्नमाचार्यः पञ्चनवतिवर्षात्मकं (९५) परिपूर्णजीवनं व्यापयित्वा दुंदुभिनामसंवत्सरे फाल्गुणकृष्णपक्षद्वादश्यां (१५०३ फिब्रवरी ३) तस्य आराध्ये श्रीवेङ्कटेश्वरे ऐक्यं प्राप। पदकवितापितामहः सङ्कीर्तनाचार्यः, पञ्चमागमसार्वभौमः, द्रविडागमसार्वभौमः इति बिरुदाङ्कितः अन्नमाचार्यः। तस्य चरित्रञ्च तिरुमलचरित्रे सदा राराजति इति एकं विशिष्टमध्ययनम्।

वेङ्कटाद्रिसमं स्थानं ब्रह्माण्डे नास्ति किञ्चन।
वेङ्कटेशसमो देवो न भूतो न भविष्यति।।





# उन्नतलक्ष्यम् - उन्नतरुचिः

तेलुगु मूलम् - डा।। वैष्णवांघ्रि सेवकदासः-
अनुवादकर्त्री डा. (श्रीमती) एम्. प्रफुल्ला

रुचिः न केवलं जिह्वया, बुध्यापि च ग्राह्या। ये एकवारं विजयस्य रुचिं जानन्ति ते पुनः पुनः विजयं प्राप्तुं इच्छन्ति। किन्तु तत्र विजयः नाम्नी रुचिः जिह्वया न अनुभूयते। तदनुभूतिः बुद्ध्या प्राप्यते। विना रुच्या जनः कार्याणि न आरभते। भोजनविषये इयं सर्वैः अपि अनुभूता एव। आस्वाद्याः पदार्थाः भोजने न विद्यन्ते चेत् भोजनेच्छा न भवति। अत एव कर्तव्ये कर्मणि अपि च कार्यविजयात् उद्भविष्यमाणाद्भुतपरिणामेषु एकैकस्यापि जनस्य रुचिः अवश्यं भवेत्। अयमेव युवजनानाम् अत्यन्तं मुख्यविषयः।

रुचिः अल्पा, विशिष्टा इति द्विधा भवति। अत्र एकः दृष्टान्तः - कोऽपि विवाहभोजनार्थं गच्छन्, मार्गे मिर्चिकापूपं खादति चेत् सा अल्परुचिः। पञ्चभक्ष्य परमान्नसहितं विवाहभोजनं आस्वादयिष्यमाणः सन् अपि मार्गे मिर्चिकापूपखादनं बुद्धिहीनता। अत एव जनः अल्परुचिं , विशिष्टरुचिं च जानीयात्। एवमेव मानवसंकल्पितेषु लक्ष्येषु अपि अल्पलक्ष्यं, उन्नतलक्ष्यं विद्येते। जीवनपरिवर्तिनि परीक्षादिने प्रतिवेशिनः गृहे समारोहः परिचरति यदि, सः उन्नतलक्ष्यं विस्मृत्य अल्पलक्ष्यम् अवलम्बते इत्यर्थः। यद्यपि मित्रैः साकं मेलनं सल्लक्ष्यमपि, परीक्षा दिने परीक्षालेखनं एव प्रधानलक्ष्यं स्यात्। किन्तु साधारणतः अल्पोन्नतरुचिभ्यां मध्ये, अल्पोन्नतलक्ष्ययोः मध्ये स्पर्धा वर्तते। ये अस्यां स्पर्धायां उन्नतरुचीः, उन्नत लक्ष्याणि समाश्रयन्ति ते जीवने विजयं प्राप्नुवन्ति। ते एव कुटुम्बाय, समाजाय, राष्ट्राय ख्यातिम् आनयन्ति। अस्मिन् विषये भगवद्गीतायाः सन्देशः एवं अस्ति

**विषया विनिवर्तन्ते निराहारस्य देहिनः।**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते।। (२-५९) इति।**

अर्थात् मानवः इन्द्रियसुखात् विरक्तः अपि इन्द्रियार्थेषु तस्य रुचिः अवशिष्यते। परन्तु उन्नतरसानुभवात् (परमात्मानुभवात्) भौतिकसुखानि त्यक्त्वा सः परमात्मनि सुस्थिरः भवति।

विवाहभोजनार्थं गच्छतः जनस्य मिर्चिकापूपरुचिः परिचिता अपि मनः जिह्वा च तया आकृष्टौ अपि सः जनः बुध्या उन्नतं आस्वाद्यमानं विवाहभोजनं स्मृत्वा मिर्चिकापूपं त्यजेत्। बुद्धिमान् तदेव करोति। भगवद्गीतायां ''परं दृष्ट्वा निवर्तते'' इत्यस्य वाक्यस्य ''उन्नतविषयाननुभूय तदनुभवज्ञानात् अल्पविषयत्यागः कर्तव्यः इत्यर्थः। तथैव जीवनपरिवर्तिनि परीक्षादिवसे विद्यार्थिनः गृहे महदुत्सवे समुपस्थिते अपि तं परित्यज्य उन्नतलक्ष्यं प्रति चलति। ये जीविने उन्नतलक्ष्याणि निश्चित्य, उन्नतरुचिषु आसक्ताः भवन्ति ते एव अल्पान् विषयान् त्यक्त्वा अग्रे गच्छन्ति। तदा अद्भुतान् विजयान् प्राप्नोति।

अतः यदि युवानः अल्परुच्या, अल्पलक्ष्येण आकर्षिताः भवन्ति, तेषु उन्नतलक्ष्याणि, उन्नतरुचयः न सन्तीति स्पष्टम्। गुरुजनानां सहायेन ये उन्नतरुचीः, उन्नतलक्ष्याणि स्थापयन्ति, तादृशाः युवतीयुवानः केवलं तात्कालिकप्रलोभान्, आकर्षणं अतिक्रम्य जीवने महोन्नतान् विजयान् साधयन्ति। क्रीडावयसि ध्रुवः तपः कृत्वा ध्रुवमंडलं प्राप्तवान्। एषः विषयः जनानां आदर्शः भवेत्। मनः अल्परुचीः प्रति प्रेरयत्यपि बुद्धिः उन्नतरुचिषु स्थिरा भवेत्। तदेव युवानां तत्क्षणकर्तव्यम्। तदर्थं साधुजनानां अनुभवज्ञानां च साङ्गत्यं, भगवद्गीतायाः मार्गदर्शनं अत्यन्तं आवश्यकम्।

# पुराणेषु श्रीवेङ्कटाचलाधीशः

- डा.गङ्गिशेट्टि लक्ष्मीनारायणः
चरवाणी - ९४९४२४८३४८

**श्रीवादिराजस्वामिना स्तुतः श्रीवेङ्कटेश्वरः।**

उडुपि पुण्यक्षेत्रे विद्यमानेषु अष्टमठेषु सोदे मठः अन्यतमः भवति। एतस्य सोदे मठस्य परम्परायां समागतः सुप्रसिद्धः यतिश्रेष्ठः श्रीवादिराजस्वामी हयग्रीवोपासकः वागीशतीर्थकरकमलसञ्जातश्च भवति। वादिराजस्वामिनः तीर्थप्रबन्धः रुग्मिणीशविजयः, युक्तिमल्लिका इति त्रीन् ग्रन्थान् व्यरचयन्। कन्नडभाषायां "लक्ष्मीशोभनम्" इति दिव्यस्तोत्रम् अपि एतैः लिखितम्। वादिराजस्वामिनः हयवदनपदाङ्कितेन कीर्तनानि व्यलिखन्। वादिराजस्वामिनः तेषां १२० वर्षात्मकजीवनकाले अनेकपर्यायं उडुपि श्रीकृष्णसेवनं कृतवन्तः। एते एव उडुपिश्रीकृष्णदेवस्थानपर्यायावस्थां वर्षद्वयं यावत् कृतवन्तः। प्रातः स्मरणीयाः एते वादिराजगुरुसार्वभौमाः स्मरणमात्रेणैव सकलारिष्टपरिहारं कुर्वन्ति। सकलेष्टप्रदातारः एते साम्प्रतं सोन्दाक्षेत्रे पञ्चबृन्दावनेषु विराजमानाः वर्तन्ते। एते स्वकीये जीवनकाले बहुवारं तिरुमलक्षेत्रं सामागत्य भगवन्तं वेङ्कटेशं सन्दर्श्य सालग्राममालां भगवते वेङ्कटेश्वराय समर्पितवन्तः इति इतिहासः। अपि च एते स्वकीये तीर्थप्रबन्धे तिरुमलक्षेत्रम् क्षेत्राधिपतिं श्रीनिवासं च विस्तारतया तात्त्विकदृष्ट्या कीर्तितवन्तः।

श्रीवेङ्कटलसच्छैलवासी दासीकृतामरः।
छायया पातु मां नित्यं श्रीनिवाससुरद्रुमः॥

श्रीवेङ्कटाचले विराजमानः प्रभासमानः श्रीनिवासकल्पवृक्षः मां रक्षेदिति सर्वाः देवताः श्रीनिवासस्य दासाः अभवन्।

दृष्ट्वा दिशि दिशि स्वीयान् दयया पालयन्निव।
वर्तते विश्वतश्चक्षुर्वेङ्कटे वेङ्कटेश्वरः॥''

विश्वं द्रष्टुमेव सहस्राक्षः वेङ्कटेश्वरः समुन्नते पर्वते दण्डायमानो भूत्वा सर्वासु दिक्षु विद्यमानान् भक्तान् दृष्ट्वा संरक्षति।

ये शङ्खचक्रोज्ज्वलबाहुयुग्माः।
स्वाङ्घ्रिं भजन्ते भवसिन्धुरेषाम्।
कटिप्रमाणस्त्विति वेङ्कटेशः।
स्फुटीकरोत्यात्मकराम्बुजातैः॥''

भगवान् श्रीवेङ्कटेश्वरः स्वस्य बाहुयुगले शङ्खचक्रे धृत्वा एकं हस्तं पादं प्रति दर्शयन् अन्यं हस्तं कटिप्रदेशे संस्थाप्य भक्तान् भवसागरे कटिस्थलं यावत् आनीय उद्धरिष्यामि इति प्रकटयति।

''प्रायोऽन्यत्र गतां श्रियं निजवशाङ्कर्तुं मुहुः काङ्क्षितम्।
भक्तानां प्रदिशन् धनं प्रतिदिनं संसाध्य साध्यप्रियः।
तत् तत्रैव पुनः सहस्रगुणितं पश्यन् घनश्यामलः।
तेषां वेश्मसु विस्मितो निवसति श्रीवेङ्कटेशोऽनिशम्॥''

सुराणां प्रियः श्रीनिवासः भक्तैः धनमेव उपायरूपेण सम्प्राप्य पुनः भक्तेभ्यः अखण्डैश्वर्यं अनुगृह्णाति।

''आरूढगरुडस्कन्दमालिंगितरमाधरम्।
आनमज्जनसर्वस्वमाश्रये वेङ्कटेश्वरम्॥''

श्रीवेङ्कटेश्वरः गरुडस्य पृष्ठभागे उपविश्य रमालिङ्गितः भवति। एतादृशं प्रणतजनसर्वस्वं तं श्रीनिवासं समाश्रये।

कशिपूकृत्य यं शेते गिरीकृत्याधितिष्ठति।
अवतीर्योऽनुजीकृत्य स तद्भक्ताग्रणीः फणी॥

शेषशयनः श्रीनिवासः साम्प्रतम् शेषाद्रौ दण्डायमानः अस्ति। रामावतारे लक्ष्मणरूपे शेषसेवां स्वीकृतवान्। कृष्णावतारे बलरामरूपे शेषगौरवान्वितः अभवत्। अतः शेषः श्रीनिवासस्य भक्ताग्रेसरेषु अन्यतमः अभवत्।

''शङ्कररविशशिमुख्याः किङ्करपदवीमुपाश्रिता यस्य।
वेङ्कटगिरिनाथोऽसौ पङ्कजनयनपरात्परो जयति।''

शिव-चन्द्र-सूर्यादयः श्रीनिवासस्य भृत्याः सन्ति। अयं पुण्डरीकाक्षः सर्ववस्तुभ्यः अतीतः।

''श्रीवेङ्कटगिरिद्रोणी क्षोणी यस्यानणीयसी।
तं वरेण्यं सुराग्रण्यं वेदगम्यं भजामहे॥''

उन्नतोन्नते वेङ्कटाचले समुन्नतप्रदेशे श्रेष्ठो भूत्वा विराजमानं सकलदेवतानायकं वेदवेद्यं श्रीवेङ्कटेशं सेवये।

''श्रीवेङ्कटपते दीनगते रम्याकृते क्षितौ।
समः समस्तमर्त्यार्तिप्रमर्दन किमस्ति ते॥''

दीनजनेभ्यः देवः मनोहरः समस्तजनपापसंहारकः इति कीर्त्यमानस्वामिन्! भवता सह को वा तुल्यः भवितुं अर्हति।

''समस्तसुजनाधारं दोषदूरं गुणाकरम्।
श्रीवेङ्कटाचलावासं श्रीनिवासं भजेऽनिशम्॥''

सकलसज्जनेभ्यः आधारभूतः दोषदूरः गुणपूर्णः इति संस्तुत्यमानं श्रीवेङ्कटगिरिवासं सदा भजे।

''आनन्दतीर्थवरदे दानवारण्यपावके।
ज्ञानदायिनि सर्वेशे श्रीनिवासेऽस्तु मे मनः॥''

आनन्दतीर्थेभ्यः वरप्रदः, दानवारण्यपावकः, ज्ञानिनां ज्ञानप्रदः, सकलजनेभ्यो स्वामी श्रीनिवासः सर्वदा मम मनसि वसेत्। एवं वादिराजस्वामिनः तीर्थप्रबन्धे श्रीवेङ्कटेशं प्रार्थितवन्तः।



## तिरुमल-तिरुपति-देवस्थानम् तिरुपति



# सप्तगिरिः

(आध्यात्मिकमासपत्रिका)



## ग्राहकत्वपत्रम्

१.नाम सङ्केतश्च: ................................................
(आंग्लभाषायाम् ................................................
स्पष्टतया लिखन्तु) ................................................
................................................
................................................
................................................

पिन्कोड (अवश्यं लेखनीयम्) ☐☐☐☐☐☐

२.अपेक्षितभाषा : ☐ संस्कृतम् ☐ तेलुगु ☐ हिन्दी ☐ कन्नड ☐ आङ्गल ☐ तमिळ

३.वार्षिकम् : रू.६०/-

४.धनप्रेषणस्य विवरणम् :

डि.डि.संख्या दिनाङ्कः

(चेक् मा प्रेषयन्तु)

प्रान्तः

दिनाङ्क :

ग्राहकस्य हस्ताक्षरम्

## दूरभाषा

ग्राहकत्वसम्बद्धविषयाणां विवरणार्थम् अस्माकं कार्यालयस्य सम्पर्क कुर्वन्तु। कार्यालयीयसमयेषु दूरभाषां कर्तुमर्हन्ति।

सम्पादककार्यालयः
०८७७-२२६ ४५४३

ग्राहकत्वविवरणार्थम्
०८७७-२२६ ४३५९



टि.टि.डि. काल्सेण्टर् सङ्ख्या
०८७७-२२७७७७७
०८७७-२२३३३३३
(टि.टि.डि काल् सेण्टर् २४ घण्टाः अपि कार्यं करोति)

- सप्तगिरिमासपत्रिकायाः वार्षिकग्राहकत्वं ६० रूप्यकाणि। संस्कृतेतरभाषापत्रिकाणाम् आजीवनग्राहकत्वं रू.५००/- । डि.डि अथवा एम्.वो 'चीप् एडिटर् ,सप्तगिरि,ति.ति.दे.,तिरुपति' इति नाम्ना एव स्वीकरणीयम्।
- सप्तगिरिमासपत्रिकायाः ग्राहकत्वं स्वीकर्तुम् उपरि विद्यमानं पत्रं कर्तयित्वा अथवा नूतनपत्रे विवरणं लिखित्वा प्रेषयितुमर्हन्ति। अधो निर्दिष्टं 'प्रधानसंपादकः,सप्तगिरिकार्यालयः,तिरुपति' इति सङ्केतं प्रत्येव पत्रं प्रेषयन्तु। अनधिकृतेभ्यः धनं दत्वा वञ्चिताः मा भवन्तु।
- मनि आर्डर् द्वारा धनप्रेषकाः भवतां विवरणं तस्मिन्नेव लिखित्वा अधो निर्दिष्टसङ्केतं प्रति प्रेषयन्तु।
- अस्माकं सङ्केतः'' प्रधानसंपादकः,सप्तगिरिकार्यालयः,टि.टि.डि.प्रेस् कांपौण्ड्.के.टि.रोड्.तिरुपति-५१७ ५०७
- शाश्वत मासपत्रिका कृते अवकाशः नास्ति, केवलं एकवर्षपर्यन्तं एव अस्ति।



Edited and Published on behalf of T.T.Devasthanams by Prof. K.Rajagopalan, Ph.D., Chief Editor, T.T.D., and Printed at T.T.D.Press by Sri. P.Ramaraju, M.A., Special Officer., (Press & Publication), T.T.D. Press, Tirupati - 517 507.

## तिरुमलतिरुपतिदेवस्थानम्

चित्तूरू जिल्ला, संदु मण्डलं,
बूरगमन्दग्रामे स्थितं
श्रीप्रसन्न वेङ्कटेश्वरस्वामिनः देवालयं २०-११-२०२०
दिने तिरुमल तिरुपति देवस्थानं स्वस्य
अनुबन्ध आलयत्वेन स्वीचकार।

एषः कार्यक्रमः आन्ध्रप्रदेश्राष्ट्रस्य
पञ्चायतीराजशाखायाः
मन्त्रिवर्यस्य गौ.श्री पेद्दिरेड्डि रामचन्द्ररेड्डि
महोदयस्य आध्वर्ये शास्त्रोक्तविधानेन निर्वर्तितः।









तिरुचानूरु श्रीपद्मावतीदेव्याः देवालये आन्लैन् विधानेन महत्त्वपूर्णत्वेन प्रवर्तितस्य
लक्षकुङ्कुमार्चनामहोत्सवस्य दृश्यम्।

